॥ सञ्जय उवाच ॥

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥
व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम् ॥
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥
राजन्संस्मृत्यसंस्मृत्य संवादमिममद्भुतम् ॥
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥
तच्च संस्मृत्यसंस्मृत्य रूपमत्यद्भुतं हरेः ॥
विस्मयो मे महान्राजन्हृष्यामि च पुनःपुनः ॥ ७७ ॥

स्वविजज्ञावितिवत् ॥ ७३ ॥ समाप्तः शास्त्रार्थः । कथासंबन्धमिदानीमनुसन्दधानः संजय उवाच—इत्यहमिति । अद्भुतं चेतसो विस्मयाख्यविकारकरं लोकेष्वसंभाव्यमानत्वात् लोमहर्षणं शरीरस्य रोमाञ्चाख्यविकारकरं तेनातिपरिपुष्टत्वं विस्मयस्य दर्शितं स्पष्टमन्यत् ॥ ॥ ७४ ॥ व्यवहितस्यापि भगवदर्जुनसंवादस्य श्रवणयोग्यतामात्मन आह—व्यासप्रसादादिति । व्यासदत्तदिव्यचक्षुःश्रोत्रादिलाभरूपात् व्यासप्रसादादिमं परं गुह्यं योगं योगाव्यभिचारिहेतुं संवादं योगेश्वरात् कृष्णात् स्वयं स्वेन पारमेश्वरेण रूपेण कथयतः साक्षादेवाहं श्रुतवानस्मि न परंपरयेति स्वभाग्यमभिनन्दति । अत्रेममिति पुँल्लिंगपाठो भाष्यकारैर्व्याख्यात एतदिति नपुंसकलिंगपाठस्यैव योगसामानाधिकरण्येन व्याख्यानमिदमिति तद्व्याख्यातारः ॥ ७५ ॥ राजन्निति । पुण्यं श्रवणेनापि सर्वपापहरं केशवार्जुनयोरिमं संवादमद्भुतं न केवलं श्रुतवानस्मि किंतु संस्मृत्यसंस्मृत्य । संभ्रमे द्विरुक्तिः । मुहुर्मुहुर्वारंवारं हृष्यामि च हर्षं प्राप्नोमि च । प्रतिक्षणं रोमाञ्चितो भवामीति वा ॥ ७६ ॥ यद्विश्वरूपाख्यं सगुणं रूपमर्जुनाय ध्यानार्थं भगवान् दर्शयामास तदिदानीमनुसन्दधानमाह—तच्चेति । तदिति विश्वरूपं हे राजन्, मम महान्विस्मयोऽत एव हृष्यामि चाहं स्पष्टमन्यत् ॥ ७७ ॥ एवं च सति स्वपुत्रे विजयादिसंभावनां परित्यजेत्याह—यत्रेति । यत्र यस्मिन् युधिष्ठिरपक्षे योगेश्वरः सर्वयोगसिद्धीनामीश्वरः सर्वज्ञः सर्वशक्तिर्भगवान् कृष्णो भक्तदुःखकर्षणस्तिष्ठति नारायणो, यत्र पार्थो धनुर्धरो यत्र गाण्डीवधन्वा तिष्ठत्यर्जुनो नरस्तत्र नरनारायणाधिष्ठिते तस्मिन् युधिष्ठिरपक्षे श्री राजलक्ष्मीर्विजयः शत्रुपराजयनिमित्त उत्कर्षो भूतिरुत्तरोत्तरं राजलक्ष्म्या विवृद्धिर्ध्रुवाऽवश्यंभाविनीति सर्वत्रान्वयः । नीतिर्नयः एवं मम मतिर्निश्चयस्तस्माद्वृथा पुत्रविजयाशां त्यक्त्वा भगवदनुगृहीतैर्लक्ष्मीविजयादिभाग्भिः पाण्डवैः सह सन्धिरेव विधी-

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥**

**इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥**

यतामित्यभिप्रायः ॥ ७८ ॥ 'वंशीविभूषितकरान्नवनीरदाभात्पीताम्बरादरुणबिम्बफलाधरो-
ष्ठात् । पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्कृष्णात्परं किमपि तत्त्वमहं न जाने ॥ काण्डत्रयात्मकं
शास्त्रं गीताख्यं येन निर्मितम् । आदिमध्यान्तषट्केषु तस्मै भगवते नमः ॥ श्रीगोविन्दमुखारविन्द-
मधुना मिष्टं महाभारते गीताख्यं परमं रहस्यमृषिणा व्यासेन विख्यापितम् । व्याख्यातं भगवत्पदैः
प्रतिपदं श्रीशङ्कराख्यैः पुनर्विस्पष्टं मधुसूदनेन मुनिना स्वज्ञानशुद्ध्यै कृतम् ॥ इह योऽस्ति विमोहय-
न्मनः परमानन्दघनः सनातनः । गुणदोषभृदेष एव नरस्तृणतुल्यो यदयं स्वयं जनः ॥ श्रीराम-
विश्वेश्वरमाधवानां प्रसादमासाद्य मया गुरूणाम् । व्याख्यानमेतद्विहितं सुबोधं समर्पितं
तच्चरणाम्बुजेषु ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपूज्यपादशिष्यश्रीमधुसूदनसरस्वती
विरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायामष्टादशोऽध्यायः ॥ १८ ॥

**समाप्तोऽयं ग्रन्थः ।**

---

पुस्तक मिलनेका ठिकाना—

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम् प्रेस—मुंबई.

